वृक्षानङ्गारकारीव मैनान्धाक्षीः समूलकान् ।
मा गमः ससुतामात्यः सबलश्च यमक्षयम् ॥१६
समवेतान्हि कः पार्थान्प्रतियुध्येत भारत ।
मरुद्भिः सहितो राजन्नपि साक्षान्मरुत्पतिः॥१७
द्यूतं मूलं कलहस्याभ्युपैति
मिथो भेदं महते दारुणाय ।
तदा स्थितोऽयं धृतराष्ट्रस्य पुत्रो
दुर्योधनः सृजते वैरमुग्रम् ॥ १८
प्रातिपेयाः शान्तनवा भीमसेनाः सबाह्लिकाः ।
दुर्योधनापराधेन कृच्छ्रं प्राप्स्यन्ति सर्वशः ॥१९
दुर्योधनो मदेनैष क्षेमं राष्ट्रं व्यपोहति ।
विषाणं गौरिव मदात्स्वयमारुजतेत्मनः ॥ २०
यश्चित्तमन्वेति परस्य राजन्
वीरः कविः स्वामवमत्य दृष्टिम् ।
नावं समुद्र इव बालनेत्रा-
मारुह्य घोरे व्यसने निमज्जेत् ॥ २१
दुर्योधनो ग्लहते पाण्डवेन
प्रीयायसे त्वं जयतीति तच्च ।
अतिनर्मा जायते संप्रहारो
यतो विनाशः समुपैति पुंसाम् ॥ २२

आकर्षस्तेऽवाक्फलः सुप्रणीतो
हृदि प्रौढो मन्त्रपदः समाधिः ।
युधिष्ठिरेण कलहस्तवाय-
मचिन्तितोऽभिमतः स्वबन्धुना ॥ २३
प्रातिपेयाः शान्तनवाः शृणुध्वं
काव्यां वाचं संसदि कौरवाणाम् ।
वैश्वानरं प्रज्वलितं सुघोरं
मा यास्यध्वं मन्दमनुप्रपन्नाः ॥ २४
यदा मन्युं पाण्डवोऽजातशत्रु-
र्न संयच्छेदक्षमदाभिभूतः ।
वृकोदरः सव्यसाची यमौ च
कोऽत्र द्वीपः स्यात्तुमुले वस्तदानीम् ॥२५
महाराज प्रभवस्त्वं धनानां
पुरा द्यूतान्मनसा यावदिच्छेः ।
बहुवित्तान्पाण्डवांश्चेज्जयस्त्वं
किं ते तत्स्याद्वसु विन्देह पार्थान् ॥ २६
जानीमहे देवितं सौबलस्य
वेद द्यूते निकृतिं पार्वतीयः ।
यतः प्राप्तः शकुनिस्तत्र यातु
मा यूयुधो भारत पाण्डवेयान् ॥ २७

॥ इति श्रीमन्महाभारते सभापर्वणि द्यूतपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

---

## सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

दुर्योधनेन विदुरोपालम्भः ॥ १ ॥ विदुरेण धृतराष्ट्रस्य हितोपदेशः ॥ २ ॥

दुर्योधन उवाच ।
परेषामेव यशसा श्लाघसे त्वं
सदा क्षत्तः कुत्सयन्धार्तराष्ट्रान् ।
जानीमहे विदुर यत्प्रियस्त्वं
बालानिवास्मानवमन्यसे नित्यमेव ॥ १
स विज्ञेयः पुरुषोऽन्यत्रकामो
निन्दाप्रशंसे हि तथा युनक्ति ।

जिह्वाऽऽत्मनो हृदयस्थं व्यनक्ति
जानीमहे त्वन्मनसः प्रातिकूल्यम् ॥ २
उत्सङ्गे च व्याल इवाहितोऽसि
मार्जारवत्पोषकं चोपहंसि ।
भर्तृघ्नं त्वां न हि पापीय आहु-
स्तस्मात्क्षत्तः किं न बिभेषि पापात् ॥ ३

॥ १५ ॥ बालनेत्रामव्युत्पन्ननेतृकाम् ॥ २१ ॥ ग्लहते पणं नि । प्रीयायसे अतिशयेन प्रीयसे ॥ २२ ॥ आकर्षो द्यूतम् ॥ २३ ॥ जयः अजयः ॥ २६ ॥ षडशीतितमोऽध्यायः॥८६॥ पापीयः पापीयांसम् ॥ ३ ॥